तन्मध्ये नवयोनिं वा विधायावस्थशक्तिभिः ।
पूजयेत् प्राग्वदुभयप्रकारादेकयोगतः ॥ ९५ ॥
यावज्जीवं विधिस्त्वेष गदितः सिद्धये सदा ।
सिद्धानामपि सर्वेषां येनासौ स्वात्मवानभूत् ॥ ९६ ॥
समस्तमेतत्तन्त्रन्ते कथितं परमेश्वरि ।
यत्परामर्शतो भावस्त्वावयोरैक्यमश्नुते ॥ ९७ ॥
तद्दद्यात्तन्त्रमेतत्तु नाभक्ताय कदाचन ।
नाशिष्याय न दम्भाय प्रच्छन्नानयशीलिने ॥ ९८ ॥
नायाचते नास्तिकाय न लुब्धाय न मानिने ।
न पापाय न वित्ताय नादत्ताय च भेदिने ॥ ९९ ॥

---

पञ्चदशपटले प्रोक्तामिति शेषः। वा विकल्पे। अवस्थशक्तिभिः सहेति शेषः। प्राग्वत् अग्राद्यप्रादक्षिण्येन उभयप्रकारादेकयोगतः द्वादशास्त्र-मध्ये केवलं योनिं नवयोनिं वा लिखेदिति यावत्। सिद्धये आत्मज्ञान-स्येति शेषः। सर्वेषां आत्मज्ञानसिद्धानां श्रीविद्यासिद्धानामिति यावत्। योगसिद्धानामाज्ञासिद्धानामिति यावत्। येन विधानेन। असौ सिद्धेषु चतुर्थ्यन्य-तमः। स्वात्मवान् स्वरूपज्ञानवान् ॥ ९६ ॥

समस्तमित्यादिभिर्भेदिन इत्यन्तैस्त्रिभिः श्लोकैस्तन्त्रार्थवेदिनः फलं तन्त्र-दाने सम्प्रदानभूतस्य वर्जनीयस्य त्रयोदशदोषांश्चोपदिशति। तत्र परमेश्वरीति देवीसम्बुद्धिः। यत्परामर्शतो भावः तन्त्रार्थविद इति शेषः। आवयोरैक्य-मश्नुते शिवशक्त्योरभेदस्वरूपो भवति। तच्छब्देन तन्त्रस्यानुभाव उच्यते। तुरवधारणे। कदाचन आपत्स्वपीत्यर्थः। दम्भाय मिथ्याचाराय। प्रच्छन्नानय-शीलिने प्रच्छन्नाय अनयशीलिने चेति यावत्। नायाचते नास्तिकाय चेति यावत्। वित्ताय अर्थार्थमिति यावत्। अदत्ताय जड़ाय। भेदिने द्विधाभाव-शीलाय ॥ ९९ ॥

यस्तन्त्रमेतत् सकल नित्याविद्यास्तु षोड़श ।
शक्त्या संगृह्य विधिवद्भजते स मदंशकः ॥ १०० ॥
शिवतत्त्वमयी व्याप्तिरिति सम्यक् समीरिता ।
ऋस्या निष्कालनाच्चित्ते तत्तत्त्वं स्वात्मसात् कृतम् ॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमते तन्त्रराजे
स्वात्मकथनं नाम षट्त्रिंशत् पटलम्
परिपूर्णम् परामृष्टम् ॥ ॐतत्सत् ॥
॥ ३६ ॥ ॐ तत्सत् ॥

---

यस्तन्त्रमित्यादिना श्लोकेन यथाविधि प्राप्ततन्त्रार्थवतः फलमुपदिशति। तत्र विधिवत् नित्यनैमित्तिकादिप्रोक्तक्रमात् स भजनपरः। मदंशकः चित्स्वरूप ईश्वर इति यावत् ॥ १०० ॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसार-
सिंहराजप्रकाशाभिधानेन सुभगानन्दनाथेन विरचितायां मनोरमा-
ख्यायां व्याख्यायां देवतादेशिकशिष्यप्रपञ्चादीनां परमार्थ-
स्वरूपप्रकाशनपरं षट्त्रिंशत्पटलं परिपूर्णं
परामृष्टम् ॥ ३६ ॥ ॐतत्सत् ॥

ग्रन्थसंख्याः—षट्त्रिंशे पटले ज्ञेयाः शिवतत्त्वमयेऽत्र च।
अध्यर्द्धसप्तषष्टिश्च व्याख्याग्रन्थाः शतत्रयम् ॥ २६७ ॥
तन्त्रे प्रकरणान्यत्र श्रीमत्कादिमताह्वये ।
शतानां नवकं त्वेकत्रिंशता च समन्वितम् ॥ ८३१ ॥

भुक्तिभूमानमाधुर्य्यभाग्यगन्धेद्धसिद्धिगाः ।
संसत् सुरश्रीरित्येकविंशत्यक्षरसंख्यया ॥
२२७७७३८७८८२१४१८५०५४६४ ।
यन्त्राणि स्युः कादिमते तन्त्रे प्रोक्तानि तत्र तु ।
दक्षिणापथपुण्यौघपरिणामाह्वयोदधिः ॥
कोष्ठयन्त्राण्यनन्तानि आदिवर्णोत्थितानि च ।
सम्भूय श्रीकादिमते तन्त्रे व्याख्यानसंख्यया ॥
सहस्राणां द्वादशकं न्यूनं पञ्चाशतेरितम् ।
काश्मीरराजस्य गुरुः श्रीकण्ठेशो द्विजेश्वरः ॥
कदाचिदागतो द्रष्टुं रामसेतुं स्वलीलया ।
तेनैवानुगृहीतोभून्मध्ये मार्गे नृसिंहराट् ॥
मन्त्राण्यधीतवांस्तस्मान्नित्यानां तेषु निर्म्मिता ।
व्याख्या मनोरमाभिख्या तेन कादिमतस्य तु ॥
शुभगानन्दनाथेन द्वाविंशपटलावधि ।
तदाज्ञयावशिष्टानां पटलानां विनिर्ममे ॥
चतुर्द्दशानां तच्छिष्यः प्रकाशानन्ददेशिकः ।
तां सुन्दरवरज्ञाभृद्व्याख्यां प्राक् सम्प्रदायतः
समाप्ता चेयं तन्त्रराजटीका मनोरमा ॥ ॐ ।

---